जनयति । तथा च तव पतिं मल्लं सकच्छबन्धमेव दृष्ट्वाऽन्ये मल्ला बिभ्यति किं पुनर्युद्धादिभिरित्यभिसन्धिः । एष एव धर्मो यत्पौरुषमन्तराप्यभिमतसिद्धिरिति धर्मः । तथा च नीतिमता व्यवहर्त्तव्यं यथा शत्रवो बिभ्यतीति नीतिः । एकस्य मल्लस्यावस्थाभेदमाकलय्य योगिना संसारे उदास्तव्यमिति युक्तिः ॥ ६९८ ॥

सच्चं साहसु देअर ! तह-तह चडुआरएण सुणएण ।

णिव्वत्तिअकज्जपरम्मुहत्तणं सिक्खिअं कत्तो ॥ ६९९ ॥

सत्यं कथय देवर ! तथा तथा[1] चाटुकारकेण शुनकेन[2] ।

निर्वर्त्तितकार्यपराङ्मुखत्वं शिक्षितं कस्मात्[3] ॥

कश्चिदशिष्टभ्रातृजायायामनुरक्तः प्रथमं कार्यसिद्धिपर्यन्तं तद्विषये सम्मुख आसीत् । सिद्धे च कार्ये पराङ्मुखो वृत्त इति तमुद्दिश्य भ्रातृजायायै वदति । किं वा पुनः सुरतविमुखं देवरमनुकूलयन्ती काप्यन्यापदेशेनाह—सच्चमिति । यस्तु प्रथममेवं प्रियं करोति स कथमप्रियमाचरतीति भावः । अनुरक्तचित्ताः स्वहानिमाकलयन्तोऽपि पराङ्मुखत्वेप्यर्थयन्त इति धर्मः । किं वा विदग्धा अस्थिरस्नेहं व्याजादुपहसन्त्येवेति नीतिः । एकत्रैव सम्मुखत्वं पराङ्मुखत्वं विज्ञाय योगिनोदास्तव्यमिति युक्तिः ॥६९९॥

मा मा मुअ परिहासं देअर ! अणहोरणा वराई सा ।

सीयम्मि वि पासिज्जइ पुणो वि एसिं कुणसु छायं ॥७००॥

मा मा मुञ्च परिहासं देवर ! अप्रावरणा वराकी सा[4] ।

शीतेऽपि प्रस्विद्यति पुनरपि अस्याः कुरु छायाम्[5] ॥

युवयोरन्योन्यरागो मया लक्षित इति प्रतिपादयन्ती कापि देवरमाह—मा मा इति । मा मा सम्भ्रमप्रतिषेधे । परिहासं मुञ्च त्यज । त्वत्सम्बन्धिनीयं वराकी अप्रावरणा अनाच्छादना तस्मात्स्वदेहेनैवास्या आच्छादनं कुर्विति भावः । नायिकाया अनुरागं व्यञ्जयन्ती प्राह—शीतेति । त्वदङ्गच्छायालाभादिति भावः । प्रस्वेदस्तु सात्त्विक एव नायकच्छायासम्बन्धादेव । व्रतिनः शीतादिक्लेशं न गणयन्तीति धर्मः । शीतार्त्तानां परिहासेनाप्युपद्रवो न विधेय इति नीतिः । निरावरणा एव योगिनः परिहासशून्या भवन्तीति युक्तिः ॥ ७०० ॥

---

१. तत्तथा for तथा तथा P.
२. भुनकेन for शुनकेन P.
३. कुतः for कस्मात् P.
४. ते for सा P.
५. कुरु छायां तस्याः for अस्याः कुरु छायाम् P.

विरचयति सप्तशतेषु गाथानां शतं यच्छ्रुत्वा कवयः ।
उन्नतभ्रूलताधूनितशीर्षं यथा स्यादेवं चमत्कुर्वन्ति[१] ॥

सप्तशतान्ते गाथामाह—विरअइ इति । सप्तशतेषु मध्ये गाथानां शतं विरचयति, विरचितवान् कृतवान् अर्थात् शालवाहनः । यद्गाथानां शतं श्रुत्वा कवयश्चमत्कुर्वन्ति । उन्नता भ्रूलता यत्र तादृशं धूनितं कम्पितं शीर्षं यथा स्यादेवं चमत्कारयन्ति चमत्कारं जनयन्ति । 'वर्तमानसामीप्ये वर्त्तमानवद्वा' इति भूते ॥

इति हारिताम्रश्रीपीताम्बरकृतायां सप्तशत्याष्टीकायां सप्तमं शतम् ॥

समाप्तोऽयं ग्रन्थः ॥

१. This verse is peculiar to Pītāmbara and is not found anywhere else.

# पीताम्बरव्याख्यातानां गाथासप्तशतीप्राकृतार्याणा-मकारादिवर्णानुक्रमेण सूची ।

P. = Page. V. = Verse.